॥ संध्या ॥ १

श्रीगणेशाय नमः ॥॥ अथ प्रातः संध्या ॥ ॐकारस्य
ब्रह्मा ऋषिर्गायत्री छंदोग्निर्देवता शुक्लो वर्णः सर्वक
र्मारंभे विनियोगः ॥ सप्तव्याहृतीनां प्रजापतिर्ऋषिर्गा यत्र्यु:
यत्र्युष्णिगनुष्टुब् बृहतीपंक्तित्रिष्टुब्जगत्यश्छंदांसि
अग्निर्वाय्वादित्यबृहस्पतिवरुणेन्द्रविश्वेदेवा देवता अनादिष्ट
प्रायश्चित्ते प्राणायामे विनियोगः ॥ गायत्र्या विश्वामित्र ऋ
विश्वामित्र जमदग्नि भरद्वाज गौतमात्रि वशि
ष्ठ कश्यपाः

१

षिर्गायत्रीछंदः सविता देवताग्निर्मुखमुपनयने प्राणायामे वि
नियोगः ॥ ॐ शिरसः प्रजापतिर्ऋषिर्ब्रह्माग्निवायुसूर्या देवता
यजुः प्राणायामे विनियोगः ॥ ॐ भूः ॥ ॐ भुवः ॥ ॐ स्वः ॥ ॐ महः ॥
ॐ जनः ॥ ॐ तपः ॥ ॐ सत्यं ॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीम
हि धियो यो नः प्रचोदयात् ॥ ॐ आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्व
रोम् ॥ ॐ सूर्यश्चमेति ब्रह्मा ऋषिः प्रकृतिः छंदः सूर्यो देवता अपामुप
स्पर्शने विनियोगः ॥ ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः ॥

सं॰ध्या
१

पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुद॥
रेण शिश्ना रात्रिस्तदवलुम्पतु यत्किंचिद् दुरितं मयि इदमहं माममृतयोनौ॥
सूर्ये ज्योतिषि जुहोमि स्वाहा॥ ॐ आपो हिष्ठेत्यादि त्र्यृचस्य सिंधुद्वीप ऋ॥
षिर्गायत्री छंदः॥ आपो देवता मार्जने विनियोगः॥ ॐ आपो हिष्ठा मयो॥
भुव स्ता न ऊर्जे दधातन महे रणाय चक्षसे॥ यो वः शिवतमो रस॥
स्तस्य भाजयतेह नः॥ उशतीरिव मातरः॥ तस्मा अरं गमाम वो य॥
स्य क्षयाय जिन्वथ॥ आपो जनयथा च नः॥ द्रुपदादिवेदिको किलो रा॥

राम
२

जपुत्र ऋषिरनुष्टुप् छंदः॥ आपो देवता सौत्रामण्यवभृथे विनियोगः॥
द्रुपदादिवमुमुचानः स्विन्नः स्नातो मलादिव पूतं पवित्रेणेवाज्य
मापः शुंधंतु मैनसः॥ अघमर्षणसूक्तस्याघमर्षण ऋषिरनुष्टुप्
छन्दो भाववृत्तं दैवतं अश्वमेधावभृथे विनियोगः॥ ऋतं च सत्यं चा
भीद्धात्तपसोऽध्यजायत ततो रात्र्यजायत ततः समुद्रो अर्णवः समुद्राद
र्णवादधि संवत्सरो अजायत अहोरात्राणि विदधद्विश्वस्य मिषतो वशी॥ णि
सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृथिवीं चांतरिक्षम

॥ सन्ध्या ॥
॥ ३ ॥

तो स्वः॥ ॐ अन्तश्चरसीति तिरश्चीन ऋषिरनुष्टुप् छंदः॥ आपो देव
ता॰ आचमने विनियोगः॥ ॐ अन्तश्चरसि भूतेषु गुहायां विश्वमूर्तिषु
त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्॥ ॐ उद्वयम
मिति हिरण्यस्तूप ऋषिरनुष्टुप् छंदः सूर्यो देवता सूर्योपस्थाने
विनियोगः॥ ॐ उद्वयं तमसस्परि स्वः पश्यन्त उत्तरं देवं देवत्रा सू
र्यमगन्म ज्योतिरुत्तमम्॥ ॐ हृदयाय नमः॥ ॐ भूः शिरसे स्वा
हा॥ ॐ भुवः शिखायै वषट्॥ ॐ स्वः कवचाय हुं॥ ॐ भूर्भुवःस्वः ने

॥ राम ॥
॥ ३ ॥

श्र

॥ आप्यायंतौ वषट् ॥ ॐ भूर्भुवः स्वः अस्त्राय फट् ॥ तेजोसीति देवा ऋषयः शु ॥

॥ ॐ दैवतं गायत्री छंदो गायत्र्या आह्वाने विनियोगः ॥ तेजोसि शुक्रमसि ॥ स्यमृत

॥ धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि ॥ ॐ गायत्र्य ॥ म २

॥ स्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि नहि पद्यसे नमस्ते तुरीयाय ॥

॥ दर्शताय पदाय परोरजसे सावदोम् ॥ ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भ ॥

॥ र्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ इति प्रातःसंध्या ॥

॥ ॐ आपः पुनंत्वित्यस्य विष्णुऋषिरनुष्टुप्छंदः ॥ आपो देवता अप ॥

॥ ामुपस्पर्शने विनियोगः ॥ आपः पुनंतु पृथिवीं पृथ्वी पूता पु ॥

म संध्या ॥ ४ ॥

॥ नान्तु मां पुनन्तु ब्रह्मणस्पतिः ॥ ब्रह्मपूता पुनातु मां यदुच्छिष्टमभो ॥
॥ ज्यं च यद्वा दुश्चरितं मम ॥ सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वा ॥
॥ हा ॥ उदुत्यमित्यस्य प्रस्कण्व ऋषिर्गायत्री छन्दः सूर्यो दे ॥
॥ वता सूर्योपस्थाने विनियोगः ॥ उदुत्यं जातवेदसं देवं वहन्ति के ॥
॥ तवः दृशे विश्वाय सूर्यं ॥ इति मध्याह्नसंध्या ॥ ० ॥ ॐ ऽग्नि ॥
॥ श्चमेति रुद्र ऋषिः प्रकृतिश्छन्दोऽग्निर्देवताऽपामुपस्पर्शने वि ॥
॥ नियोगः ॥ ॐ ऽग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृ ॥
॥ तेभ्यः पापेभ्यो रक्षन्तां यदह्ना पापमकार्षं मनसा वाचा हस्ताभ्यां ॥ तम ॥

॥ ४

॥ पद्मासुदरोराशिश्वाश्रुहस्तदवलं भजपाकिं चिद्गुत्तिं मयि द्गु ॥
ह ॥ दमसमनपोनैसस्यजोतिपिग्रहो मिस्यात ॥ ॐ चित्रमित्यस्य ॥
॥ कौत्स ऋषिः त्रिष्टुप् छन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः ॥
॥ ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः आप्रा ॥
॥ द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्त षश्च ॥ ॐ त ॥ स्थु
षि ॥ च्चक्षुरित्यस्य दध्यङ्ङाथर्वण ऋषिः पुरउष्णिक् छन्दः सूर्यो ॥
॥ देवता सूर्योपस्थाने विनियोगः ॥ ॐ तच्चक्षुर्देवहितं पुरस्ताच्छु ॥
॥ क्रमुच्चरत् पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम ॥

१

॥ संध्या ॥ ॥ शरदः शतं पश्याम शरदः शतं मदीनास्याम शरदः शतं भूयश्च शरदः ॥
॥ ५ ॥ ॥ शतात् ॥ इति श्रीसंध्या समाप्ता ॥ श्रावणमासे शुक्ल ॥
॥ पक्षे तिथौ अष्टम्यां रविवासरे संवत् १८४२ का ॥
॥ के ८७ पादराम्रुसकंदस्नानादशं लिखितं मया प ॥
॥ दिरुद्रं मरुद्वाममदेवोनदीपनैरु तिश्री संध्या ॥
॥ माप्ता [illegible]
॥ [illegible] रामरामरामशिवशिव ॥
॥ ॥
॥ राम ॥
॥ ५ ॥